## अथ नवार्थाः ।

-०*०-

वातारिर्जंतुकायाश्च भल्लयां नीलदवज्ञयोः ।
टेन्दुकामण्डयोर्भार्ग्यां निर्गुण्ड्यां शूरणे स्मृतः ॥ १ ॥
धात्री गुडूची रास्ना च द्विधा दूर्वा हरीतकी ।
लिङ्गिनी तुवरी मद्यं धीमतायां नवौषधी ॥ २ ॥
ब्राह्मी वराही लशुनी विषश्च शुक्लादिकन्दः सितकण्टकारी ।
भूम्याहुली चेदपराजिता च शुण्ठीति चैतासु महौषधी स्यात् ॥३॥

इति नवार्थाः ।

---

## अथ दशार्थाः ।

—००—

सितायां वाकुची दूर्वा मद्यं धात्री कुटुम्बिनी ।
चन्द्रिका च प्रिया पिङ्गा त्रायमाणा च तेजिनी ॥ १ ॥

इति दशार्थाः ।

---

## अथैकादशार्थाः ।

—००*००—

स्यादश्वमांसी तुलसी हरिद्रा
तालस्तथा रोचनहेमम
जनप्रिया योजनवल्लिका स्यात्
समल्लिका चन्द्रशशी च गौर्य्याम् ॥ १ ॥

दूर्वा निशा ऋद्धिवचा प्रिया च
सा माषपर्णी शिमिरोचना त्वथ ।
त्रायन्तिका जीवनिका महाबला
मङ्गल्यकायामिति चन्द्रमाह्वयाः ॥ २ ॥
प्रियङ्गुछिन्ना त्रिवृता कणाह्वया
वन्दाकदूर्वा तुलसी च नीलिनी ।
दुर्गा खगः कस्तुरिकृष्णसारिवा
श्यामा महीन्दुः कथिता भिषग्वरैः ॥ ३ ॥

इत्येकादशार्थाः ।

इत्थं विचिन्त्य विनिवेशिततत्तदेका-
-नेकार्थनाम-गण-संग्रह पूर्णमेनम् ।
वर्गं विचार्य्य भिषजा बहुभक्तिभाजा
ज्ञेया स्वयं प्रकरणानुगुणाः प्रयोगाः ॥ ४ ॥

एको यश्च मनस्विनामचतुरो यश्च द्वयोरश्विनो-
स्त्र्यच्चाश्चाचतुरो नृपश्चवदनो नाम्नाऽरिषष्ठां जयी ।
एकार्थादिरमुष्य नाम-रचना-चूड़ामणौ यस्त्रयो-
विंशोऽसौ समपूरि सार्द्धममुना ग्रन्थेन वर्गो महान् ॥ ५ ॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्य्यायवत्यभि-
धानचूड़ामणावेकार्थाद्यभिधानस्त्रयोविंशो वर्गः ।

सम्पूर्णोऽयं ग्रन्थः ।